संस्कृतविद्यासमिति-पत्रिका

SAMSKRITASRI

ஸம்ஸ்க்ருதஸ்ரீ:

A Monthly Journal of
Samskrit Education Society

ஸம்ஸ்க்ருத கல்விக் கழக மாத இதழ்
212/13-1,
செயிண்ட் மேரிஸ் ரோடு,
மந்தைவெளி, சென்னை-28

தனி ப்ரதி
விலை ரூ. 4

MAY - 2019

श्रीशाङ्घ्रिपद्मयुगलालिमिहानतानां रक्षाव्रतैकनिपुणं कविसार्वभौमम्।
माराभिधं मधुरवाङ्नुतपादपद्मं श्रीरम्यतातनगरीशठकोपमीडे ।।

திருமாலின் திருவடித்தாமரையிணையில் வண்டானவரும் அடியார்களைக் காக்கும் நோன்பில் திறமைமிகுந்த ஒருவரும் கவிச்சக்ரவர்த்தியும் மாறன் என்ற பெயர் கொண்டவரும் மதுரகவியால் தொழப்பட்ட அடித்தாமரையுடையவரும் அழகிய ஆழ்வார்திருநகரியின் சடகோபருமான நம்மாழ்வாரை வணங்குகிறேன்.

☎ 24951402

உ

# THE SAMSKRIT EDUCATION SOCIETY (Regd) MADRAS

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.

Secretary & Treasurer : **Sri G. SITHARAMAN**, F.C.A.
Editor and Publisher : **S. SRINIVASA SARMA**
Associate Editor : **Dr. G. Sankaranarayanan**
Department of Sanskrit,
SCSVMV Univeristy, Enathur,
Kanchipuram, Tamilnadu
Cell : 99941 03957

1. ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், ஆழ்வார்ப்பேட்டை — 98843 122[illegible]
2. ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், மேடவாக்கம் — 9884158110
3. ஸ்ரீமதி சாந்தி அசோக், மந்தைவெளி — 2495140[illegible]
4. ஸ்ரீமதி கௌரீ கருணாகரன், மைலாப்பூர், — 24320[illegible]
5. ஸ்ரீமதி ரமாசுந்தரராஜன், சென்னை -95, — 65687[illegible]
6. ஸ்ரீமத் பார்வதீ ராமசந்திரன் அண்ணா நகர் — 2621[illegible]
7. ஸ்ரீ R. முத்து கிருஷ்ண ன் கொரட்டூர் — 26872430
8. ஸ்ரீ S. ரங்கநாத சர்மா, சேலையூர் — 22291720
9. ஸ்ரீமதி புவனேச்வரீ ராஜகீழ்பாக்கம் — 9841[illegible]
10. ஸ்ரீ K. ராஜேச்வரீ மாடம்பாக்கம் — 9962837319
11. ஸ்ரீ S. ஹரிஹரன் நங்கைநல்லூர் — 9841403859
12. ஸ்ரீ S. அனந்தன், மதுராந்தகம் — 9894709418
13. ஸ்ரீ P.R. சுப்ரமண்யம், ஓ.ஓ. நகர் — 23640864
14. ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய ஸ்ரீரங்கம் — 2430632
15. ஸ்ரீமதி ராஜம் சுந்தர், திருநெல்வேலி — 9488326850
16. ஸ்ரீ P.D. ஸ்ரீநிவாஸன், திருநின்றவூர் — 9445703470
17. ஸ்ரீ R. ரங்கநாதன், காஞ்சீபுரம் — 97910 55428
18. ஸ்ரீ C.A. ஏகாம்பரம், கோயம்புத்தூர் — 0422-2233242
19. ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, — 0487-2382964
20. ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், Mumbai East — 09757115154

ஸ்ரீ வி. கோதண்டராமன், Mrs. கீதா ரேகா,ஆதம்பாக்கம் 9444469638.

# संस्कृतश्रीः

माला : ४१ May - 2019 पुष्पम् : ०५

कलि : ५१२१ विकारी - ऋषभमासः ४१-०५

The Samskrit Education Society Established with the blessings of His Holiness **SRI MAHASWAMIGAL** of Kanchi Kamakoti Peetam in the year 1957.

**OFFICE:**
Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai – 600 028.

**PRESENT ACTIVITES**
1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.



"DD/Cheque should be sent by Speed-Post only"



**SUBSCRIPTION RATES**

| | |
|---|---|
| ANNUAL | : Rs. 40/- |
| LIFE SUBSCRIPTION | : Rs. 400/- |
| PAGE DONATION | : RS.200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer.

**The Samskrit Education Society (Regd.),**
Old 212/13-1, St.Mary's Road,
Mandaiveli, Chennai - 600 028.
Ph: 044 - 24951402
Mail: samskritasri@gmail.com

# सम्पादकीयम्

**ज्ञानाम्भोनिधिमद्भुतं सुगहनं निर्मथ्य धीमन्थनात्**
**लब्ध्वा तत्त्वसुधां बुधचयैः लेखं विलिख्यादरात्।**
**येहाभूषितविभ्रमा विजयते श्रीदेववाणीसुता**
**जीयात्सर्वयशोविलासमहिता सा संस्कृतश्रीः वरा।।**

**शोकस्थानसहस्राणि भयस्थानशतानि च।**
**दिवसे दिवसे मूढम् आविशन्ति न पण्डितम्।।**

इति सूक्तिः ज्ञानावश्यकतां सत्यापयति। अज्ञः खलु शोकभयादिग्रस्तः जीवितमभद्रं पश्यति। विद्याविलासमहितो बुधः जीवितस्य याथार्थ्यमवगच्छन् शोकभयादीनामस्थैर्यमनुभवतः पश्यन् न परिभूयते। इदञ्च ज्ञानं द्विविधम्। विविधग्रन्थालोडनपरिश्रमलभ्यम् प्रथमम् जीवनस्य विविधावस्थादर्शनजनितं द्वितीयम्। तत्र द्वयोरपि भवति महत्त्वम्, किन्तु द्वितीयं साक्षादनुभवरूपं सद्विविधदुःखभयादिनाशिकां प्रक्रियां जीवितस्य यथार्थबोधस्वरूपां पुरत उपस्थापयति। किन्तु ग्रन्थावलोडनजनितस्यापि भवति महत्त्वं यद् क्रमशः स्वस्यान्येषाञ्च बोधनाप्रणालीं दृढयति। ये च विद्वांसः ग्रन्थावलोडनमर्मज्ञाः जीवितस्य परम्पारञ्चापश्यन्, तादृशाः महनीयाः करुणया स्वानुभूतमर्थं परायोपदेष्टुं रचयन्ति विविधानंशान् येन परोप्यारम्भदशायामेवानुभूतिमहितं ज्ञानमाप्नुते। यद्यपीदं ज्ञानं स्वानुभूत्या दृढीभवत्यथाप्यारम्भदशायामेवेदं ज्ञानं सञ्जायत इति तादृशलेखनानां महत्त्वं वरीवर्त्येव। अतः विद्वांसो वृद्धाः स्वानुभवं सत्पथप्रदर्शकम् आरचय्योपकुर्वन्तु सर्वान् युवकान् तदर्थमियं संस्कृतश्रीः भूयात्प्रणालिकेव समस्तज्ञाननीर - प्रापिकेति प्रार्थयते सम्पादकवर्गः।

# निपुणप्राघुणकम् (भाणः)

**Dr. SHANKAR RAJARAMAN**
Bangalore

(निरूप्य) - अयमेष चलच्चित्रावलोकनरसिको द्राविडः कुसुमविक्रेता मणिकण्ठः। यस्य वदनोदराज्ज्ञातलज्जेव निष्क्रामति विवर्णा कर्णाटभारती। (प्रकाशं) भो वयस्य मणिकण्ठ, निरन्तरफलोदया खलु ते कुसुमवृत्तिः।

तद्दर्शय मे कानिचन कुसुमानि यान्युपहारीकृत्य सन्तोषयामि चित्रलेखाम्। (आकर्ण्य) किं ब्रवीषि - **इत आस्यतामार्येण यावदहमपि कुसुमानि दर्शयामि**। (तथा कृत्वा, आकर्ण्य) किं ब्रवीषि - 'आर्य, इमाः पुरस्तादरुणधवलपाटलपीतवर्णा रोचिष्मत्यः (Roses) ।

इमानि पुनरनुद्भिन्नमुकुलान्युष्णीषकुसुमानि (Tulip ) नूतनोऽयमसिपुष्पगुच्छः (Gladiolus)। एतानि च वेशयुवतिहृदयानीव नैकरागाणि देहलिकाकुसुमानि (Dahlia)। इयमपरा प्रभातकीर्तिः (Morning Glory) अन्यत्र नानाविधकुसुमकर्बुरिताः पुष्पबाण तूणायमाना एते कृत्रिमस्तबकाः। एतेषु यदात्मने रोचते तदार्यो गृह्णातु' इति। मणिकण्ठ, कथं गृह्णात्विति, न पुनर्यथारीति क्रीणात्विति ? (निरूप्य स्वगतं) कथं मद्वचनेन सविलक्षस्मितोऽयमीषल्लक्ष्यमाण-रदनस्तिष्ठति ?

(आकर्ण्य) किं ब्रवीषि - **नन्वार्येणैव कथितं यदमूनि कुसुमानि चित्रलेखायै उपहारीक्रियन्ते। तदत्र वाणिज्यमिति सशुल्को नरकप्रवेशः। अपि च न प्रतिदिनं मदीयानि कुसुमानि तादृशनटीरत्न-करस्पर्शसौभाग्यं लभन्ते** इति ।

(सानन्दं) साधु मणिकण्ठ साधु !

**अम्ल्यायिनो गुणगणग्रहणोचितस्य**

**दृष्ट्वापि ते सुमनसो महिमानमग्रे ।**

**मीलन्ति यत्र सहसा कुसुमान्यमूनि**

**व्रीडाभरेण किमु तद्यवनानुषङ्गात् ।। ५५**

(निरूप्य) वयस्य, रोचिष्मतीनां मञ्जरीमिमामादातिमिच्छमि ।

कुतः -

**आनन्दने द्वे प्रमदाजनस्य**

**रत्नेषु हीरः कुसुमेषु रोजा (Rose) । ५६**

**व्यनक्ति तत्रान्तिममेव सम्य-**

**क्स्वाभाविकं प्रेमरसं प्रदातुः ।।**

(आकर्ण्य) किं ब्रवीषि - **उपपन्नमार्येण कथितम्** इति।

(स्तबकादानं नाटयति) वयस्य भद्रमस्तु भवते । अहमपीदानीं साधयामि।

(अनुवर्तते....)

## नीतिद्विषष्टिका

**विद्वत्वे यतितव्यं नार्थेष्वेवादरः कार्यः।**
**अर्थस्सर्वजनगतः विद्वत्ता दुर्लभा लोके।।**

**நாம் வித்யைக்காகப் பாடுபடவேண்டும். எப்போதும் பணத்திற்காகவே சிரமப்படக் கூடாது. ஏனெனில் பணம் எல்லோரிடமும் இருக்கிறது. வித்யை உலகில் துர்லபம்.**

# विमानशतकम्

**Prof. ABHIRAJA RAJENDRA MISHRA**
Formerly Vice-Chancellor, Varanasi

बहिर्भागेऽथ देहल्याः पालमाख्ये मनोहरे।
विमानं तन्मया दृष्टं चारुवर्णं प्रभोज्ज्वलम्।।१।।

उत्पतिष्णु स्फुरत्पक्षं हुङ्कुर्वाणं शनैः शनैः।
पर्याकुलं च बालानां चालकानां गतागतैः।।२।।

अधोभागस्थितैर्भृत्यैः पूर्यमाणं मुहुर्मुहुः।
यथापेक्षितसामग्र्या यथेच्छमिन्धनादिभिः।।३।।

अथारोहणकालोऽपि सम्प्राप्तश्चिरकांक्षितः।
ऐं ह्रीं क्लीमों समुच्चार्य विमाने कृतमास्पदम्।।४।।

दर्शं दर्शं च विच्छित्तिं वैमानीमन्तरङ्गिकीम्।
परमं विस्मयं भेजे मानसं चित्रमेदुरम्।।५।।

क्वचिच्चित्रलसद्भित्तौ पानगोष्ठीमहोत्सवः।
क्वचिदङ्कस्थवामोरुचुम्बनादिविधानकम्।।६।।

क्वचिदारण्यवृत्तान्तः क्वचिन्नागरवीथिका।
क्वचित्तरुविहङ्गानां तौर्यत्रिकविनोदनम्।।७।।

गवाक्षैर्वर्तुलाकारैर्बहुसंख्यैरकल्मषैः।
साक्षादिव सहस्राक्षो विमानं तददृश्यत।।८।।

एवमादि च साश्चर्यं चिन्तयत्येव मय्यथ।
वारिवाह इवोद्भ्रान्तो वायुयानं चचाल तत्।।९।।

पश्चादादौ ततस्तिर्यक् सम्मुखं चाप्यनन्तरम्।
शनैः शनैस्ततस्तूर्णं मध्ये तूर्णतरं पुनः।।१०।।

अथोवाच गिरा मृद्व्या चालकान्यतमो युवा।
प्रमादो नैव कर्तव्यो यानमुद्याति साम्प्रतम्।।११।।

बन्ध आसन्दिकालग्नो नियन्तव्यः प्रयत्नतः।
वातायनं पिधातव्यं लोकनीयं न वा बहिः।।१२।।

मध्येयानं कृतस्थाने घोषयत्येव चालके।
युगान्तघर्घरारावोऽकस्मादेव समुत्थितः।।१३।।

ततस्तूर्णतमैर्वेगैर्धावमानं महाजवम्।
विमानं वसुधां हित्वा नभोमण्डलमाययौ।।१४।।

ऊर्ध्वस्कन्धं स्फुरद्गत्या निमेषैः कैश्चिदेव हि।
चन्द्रतारकमध्यस्थं विमानं तद्बभौ ततः।।१५।।

प्राणरक्षापरीधानधारणस्य प्रदर्शनम्।
सविलासं सविब्बोकं सुमुखीभ्यां समाहितम्।।१६।।

एवमादिषु पूर्णेषु विमानं तन्निराकुलम्।
निश्चलं ननु निष्कम्पं जातं शमितघर्घरम्।।१७।।

अभून्मनसि सोत्कण्ठे यथा स्वाध्यायाकक्षके।
तिष्ठन्निर्मक्षिकं काञ्चित् पत्रिकां प्रपठाम्यहम्।।१८।।

अथ क्रमः समारब्धः सपीतेः स्नेहमेदुरः।
अनानासरसो जातु नारङ्गकरसोऽथवा।।१९।।

कदाचिदुष्णपेयं वा चायकाफीसमाह्वयम्।
लेह्यं चोष्यं क्वचिन्मध्ये विविधः फलसञ्चयः।।२०।।

(अनुवर्तते....)

# न हि एकेन चक्रेण रथस्य गतिः भवेत्

**Sri. HARIHARAN**
Samskrita Vidya Samiti, Chennai

अस्माकं पुराणेषु भगवतः सूर्यस्य रथः एकचक्रः इति वर्णितः। प्रतिदिनं **सूर्यः उदेति, सूर्यः अस्तमेति च** इति पश्यतामस्माकं मनसि **एकेन चक्रेणापि रथस्य गतिः भवितुं शक्या** इति स्फुरति एव। तथापि लोके अस्माकं सामान्यजीवने एतत् शक्यं वा इति किञ्चित् विमृश्य द्रष्टुमिष्यते।

शीर्षकगता पङ्क्तिः अधो दत्तात् सुभाषितात् उद्धृता वर्तते।

**यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।**
**एवं पुरुषकारेण विना दैवं न सिध्यति।।**

कस्यापि कर्मणः सिद्धये पुरुषकारः विधेयः भवति। अर्थात् क्रियाशक्तिः प्रदर्शनीया भवति। तदैव दैवानुग्रहः लब्धः भवति, कार्यसिद्धिः अपि सम्भवति। एवम् अत्र कस्यापि कर्मणः वाञ्छितगतये क्रियाशक्त्या पौरुषं, भगवत्साहाय्यं चेति चक्रद्वयमावश्यकमिति स्पष्टं भाति।

लोके ब्रह्मचारी, गृहस्थः, वानप्रस्थः, सन्न्यासी चेति आश्रमाः चत्वारः इति सर्वैः विदितमेव। अत्र प्रसिद्धा उक्तिः एका एवमस्ति यत् यथा मातरमाश्रित्यैव शिशवः वर्तन्ते तथा गृहस्थमाश्रित्य अन्ये त्रयः आश्रमाः वर्तन्ते इति। अतः लोकस्य गतये गृहस्थः अतिमुख्यः इति स्फुटं ध्वनति। अस्मिन् गृहस्थाश्रमे पत्नी पतिः च भवतः। गृहे पचनादिकम् आन्तरं कर्म पत्नी निर्वहति। गृहमस्याः अस्तीति पत्नी

गृहिणी इति कथितास्ति। धनसम्पादनादिकं बाह्यं कर्म पतिः निर्वहति। दैवमाह्निकं कर्म विहाय पत्युः सर्वं कर्म बहिः एव विद्यते। एषः पतिः केवलं गृहे तिष्ठति इति अर्थे गृहस्थः इति उक्तः, न कदापि गृही इति। **दम्** इत्युक्ते **पत्नी** इति। दं च पतिः च इति दम्पती इति नित्यद्विवचनान्तरूपं सिद्धमस्ति । एतौ दम्पती विना गृहस्य गतिः न भवितुमर्हति। अन्ये आश्रमाः गृहस्थाश्रमाधीनाः इति कारणात् लोकस्य गतिः गृहगत्या संयुक्ता वर्तते। लोकः एव रथः इति स्वीकृतः चेत् दम्पती रथस्य द्वे चक्रे भवतः। लोकस्य (रथस्य) गतये अपि चक्रद्वयमावश्यकम्।

पुनः गृहस्थाश्रमस्य अविच्छेदः (Continuity) अनिवार्यः अपि। एतदर्थं वंशवृद्धिः भवितव्या। वंशवृद्धये स्त्रीपुंसौ आवश्यकौ इति कारणात् अत्रापि लोकगतिः चक्रद्वयेन एव भवति इति अर्थः सिद्धः।

लोकः इष्टप्राप्तौ सुखं तथा अनिष्टप्राप्तौ दुःखं च अनुभवति। लोकगतौ सुखदुःखे अन्तर्भवतः इति अत्रापि लोकगतिः चक्रद्वयेन एव सम्भवति।

लोके ज्ञानिनः भवन्ति। एते सुखदुःखे समे कृत्वा एकेन चक्रेण एव रथं चालयितुं समर्थाः भवेयुः। परन्तु एते लोके विरलाः। लोके विरलाः भवितुम् अर्हन्ति परन्तु विरलत्वं लोकः न। अतः **न हि एकेन चक्रेण रथस्य गतिः भवेत्** इति उक्तिः सर्वैः अभ्युपगन्तव्या एव।।

# SATYAM ADVAITAM

Sri. P.R. KANNAN, Mumbai

**५९. स चात्मभूतः सर्वस्य ।**

**(केनोपनिषद्भाष्यम्) वा. भा.- ३.१**

He (Brahman) is verily the indwelling Atman of all. (Kenopanishad Vakya Bhashyam 3.1)

**६०. ईश्वराद्भिन्नलक्षणाः आत्मनो न सन्ति ।**

**(केनोपनिषद्भाष्यम्) वा.भा. ३-१**

Atman does not have characteristics different from Iswaras. (Kenopanishad Vakya Bhashyam 3.1)

**६१. अविद्यावदुपलभ्यत्वाच्च भेदस्य, तत्क्षयेऽनुपपत्तिरिति सिद्धमेकत्वम् । (केनोपनिषद्भाष्यम्) वा.भा. ३-१**

Difference is perceived only by the ignorant one. Only when Avidya (ignorance) ceases, difference vanishes and the unity of Atman in all beings and of Atman withSupreme Brahman is firmly established. (Kenopanishad Vakya Bhashyam 3.1)

**६२. ज्ञानस्य ह्येषा परा निष्ठा यदात्मैकत्वविज्ञानम् ।**

**(कठभाष्यम्) १-२-८**

The pinnacle of knowledge is verily the experience of unity of Atman in all beings.

(Kathopanishad Bhashyam 1.2.8).

६३. परमार्थतोऽनुपाधिकृतं च तत्वमेकमेवाद्वितीयमुपादेयम् ।
(प्रश्नभाष्यम्) ६-३

The highest attainment is to perceive the principle of one alone with no second, with no conditionings. (Prasnopanishad Bhashyam 6.3)

६४. न च तत्र कर्तृत्वं भोक्तृत्वं वा क्रियाकारकफलं वा स्यात्।
(प्रश्नभाष्यम्) ६-३

In that highest state, there is no doership, nor enjoyership, nor fruit of actions propelled by him. (Prasnopanishad Bhashyam 6.3)

६५. सर्वस्य प्रत्यगात्मत्वात् अवगतिरेव गतिरुच्यते ।
(कठभाष्यम्) १-३-१२

As Atman is the indwelling spirit in all beings, true perception of Atman is alone the aim of life. (Kathopanishad Bhashyam 1.3.12)

६६. सर्वव्याप्येक एवात्मा जगतः । (कठभाष्यम्) २-२-२

Atman is one alone and pervades the entire universe. (Kathopanishad Bhashyam 2.2.2)

६७. तत्य च याथात्म्यं.........अत्यन्तविशुद्धमद्वैतम् ।
(ब्रह्मसूत्रभाष्यम्)

The real nature (of universe) is the extremely pure non-dual Atman. (Brahmasutra Bhashyam)

[To be continued....]

## श्रीमद्रामानुजाचार्यदण्डकः

**Dr.V.SOWMYANARAYANAN,**
Assistant Professor & Head, Dept., of Sanskrit,
D.G.Vaishnav College, Arumbakkam, Chennai 600 106.

एतस्मिन् आङ्गल मे मासे नवमं दिनाङ्कं शुभदिनमभवत्। यतो हि द्रमिडमासे चैत्रमासे षड्विंशतितमे दिने आर्द्रा नक्षत्रमभवत्। को विशेष इत्युक्ते श्रीभाष्यकारस्य त्र्युत्तरसहस्रतमजन्मदिनोत्सवः। को वा एतस्य विशेष इत्युक्ते एत एव विशिष्टाद्वैतस्थापकाः। एते मनुष्याणां सत्पथप्रदर्शकाः अभवन्। कथं जीवनं सन्मार्गे यापनीयं भगवत्प्राप्त्यर्थम् उपायाः के इति सर्वम् एते बोधयामासुः। अनेनैव कारणेन एतेषां बहवः जनाः तस्य शिष्याः अभवन्। अनेनैव कारणेन बहवः मानवाः असंख्येयकाः एतानेव स्वाचार्यमिति मत्वा एतानमेवानुसरन्ति स्म।

एते स्वज्ञातविषयान् सर्वान् नवविधग्रन्थरूपैः निबन्धान् चक्रुः। वेदार्थसंग्रह-वेदान्तदीप-सार-शारीरकभाष्य-गीताभाष्य-गद्यत्रय-नित्यग्रन्थ इति। एतान् ग्रन्थान् नवसंख्याकान् वया विधया चेन्नैमण्डलस्थः श्रीरङ्गं श्रीमदाण्डवनाश्रमः प्रकाशनम् अकरोत्।

### श्रीमद्रामानुजाचार्यदण्डकः

**नमस्तस्मै नमो रङ्गलक्ष्मणाह्वययोगिने।**
**श्रीमद्वेदान्तरामानुजात्तसार्वज्ञ्यशालिने।।**
**वेदवेदान्ततत्त्वज्ञो वेदमौलिमुनिश्रुतः।**
**श्रीरङ्गलक्ष्मणमुनिः सन्निधत्तां सदा हृदि।।**
**नमः शेषावताराय वैकुण्ठपददर्शिने।**
**श्रीमद्रामानुजार्याय श्रीमच्छिष्यहितैषिणे।।**

जयतु जयतु संयमीन्द्रोऽनघः श्रीमतो धीमतः केशवाचार्यपुत्रार्यवर्योऽ-खिलानन्दकारुण्यवारां निधिः पातु नः शिष्यसन्तारकोऽहर्निशं श्रीनिधिः, यज्ञसूत्राभिभूष्णुं त्रिदण्डात्तहस्तं लसत्स्वूर्ध्वपुण्ड्रं शिखाशेखरं संयमीनां पतिं विष्णुतत्त्वार्थबोधप्रचारव्रतं वैष्णवानां गुरुं सन्ततं भजे।। १

श्रितजनपरिपालकेन श्रुतीनामपार्थापहर्त्रा समाराधितानन्त-भूकान्तगोविन्दराट्-रङ्गराट्-देवराट् यादवाद्रीशरामप्रियेणैव पूता वयम्, श्रीमते धीमते कान्तिमत्या मुखाम्भोजसूर्याय काञ्चीवराज्ञप्तदेवाधिराट्-मज्जनानीतशालसुवाप्यम्बुकुम्भाय च श्रीमहापूर्णसंस्कारिता यास्तु शम्।।२

हरिपदकमलाश्रिताद् ब्रह्मसूत्रार्थभाष्याख्यवैदग्ध्यसंभावित-श्रीसरोजासनीसत्कृतश्रीयुतात् भाष्यकाराभिधेयादृते नापि का नो गतिः, श्रीमदाचार्यपञ्चेभ्य एधिष्ट सच्छ्रीबलज्ञानरूपायुरारोग्यसौख्या-श्रयैश्वर्यवैराग्यधृत्यादिवर्गप्रदस्योद्यतश्शिष्यभाग्याय भक्ता भवामा-निशम्।। ३

दुरितशमनपाञ्चजन्याङ्कुशश्रीरथाङ्गध्वजाम्भोजवज्राङ्कित श्रीपदासेतुहैमाद्रिपर्यन्तसञ्चारिणोस्सम्यमीन्द्रस्य पादारविन्दद्वयोर्नो भराः, पापसंहारक, ज्ञानदीपप्रदाश्रेय, शान्तस्वरूपाखिलानन्तकल्याणदातः, कलिध्वंसक, क्लिष्टसंवारक, श्रीयतीनां पते नो, नमस्ते पुनस्ते नमः।। ४

**षट्त्रिंशद्गणचरणो नरपरिपाठी यतीन्द्रगुणपरकः।**
**यतिराजदण्डकोऽयं विलसतु वैष्णवमनस्सु चु सर्वदा।।**
**विभक्तिभक्तिदः सोऽयं सौम्यनारायणोदितः।**
**श्रीवैष्णवसुतोषाय गीतो यतीन्द्रदण्डकः।।**
**वेदान्तविद्वरिष्ठाय वेदशास्त्रविनोदिने।**
**नमोऽचिन्त्याय मुनये रङ्गरामानुजाय ते ।।**

# रघुवंशम्

**Sri. R.RANGANATHAN,**
Sanskrit Education Society, Kanchipuram

## रघुवंशे द्वादशसर्गे सप्तषष्टितमः श्लोकः

**स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।**
**न केवलं भुवः पृष्ठे व्योम्नि संबाधवर्तिभिः ।।**

**पदच्छेदः**

सः, प्रतस्थे, अरिनाशाय, हरिसैन्यैः, अनुद्रुतः, न, केवलं, भुवः, पृष्ठे, व्योम्नि, संबाधवर्त्तिभिः।

**शब्दधातुरूपाणि**

सः - दका. पु. प्र. एक।
प्रतस्थे - प्रतस्थे, प्रतस्थाते, प्रतस्थिरे। प्र इत्युपसर्गपूर्वक **ष्ठा - गतिनिवृत्तौ** इति धातोः लिटि प्र. पु. एक।
अरिनाशाय - अका. पुं. च. एक।
हरिसैन्यैः - अका. पुं. तृ. बहु।
अनुद्रुतः - रामशब्दवत्।
न, केवलम् - अव्ययम्।
भुवः - भुवः, भुवोः, भुवाम्। ऊका. स्त्री. ष. एक।
पृष्ठे - अका. नपुं. स. एक।
व्योम्नि - व्योम्नि, व्योम्नोः, व्योमसु - नका. पुं. स. एक।
संबाधवर्तिभिः - वर्तिना, वर्तिभ्यां, वर्तिभिः - नका. पुं. तृ. बहु।

**प्रतिपदार्थः** -

सः - அந்த ராமர், भुवः पृष्ठे केवलं न - பூமியின் மீது மட்டுமல்லாமல், व्योम्नि - ஆகாயத்திலும், संबाधवर्तिभिः -

நெருங்கியிருக்கின்ற, हरिसैन्यैः - வானரப்படைகளால், अनुद्रुतः- பின் தொடரப்பட்டவராய், अरिनाशाय - எதிரியை அழிப்பதற்காக, प्रतस्थे - புறப்பட்டார்.

**व्याकरणविशेषाः**

अरिनाशाय - अरेः नाशः। तस्मै।
हरिसैन्यैः - हरीणां सैन्यम्। तैः।

**कोषः**

हरिः - शुकाहिकरिभेकेषु हरिर्ना कपिले त्रिषु।

**भावार्थः**

शत्रुसंहाराय प्रस्थितं रामं महती कपिचमूः अनुससार। सा न केवलं भूम्यां किञ्च आकाशे अपि अनुगामनी आसीत्।

**रघुवंशे द्वादशसर्गे अष्टषष्टितमः श्लोकः**

**निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।**
**स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य चोदितः ।।**

**पदच्छेदः**

निविष्टम्, उदधेः, कूले, तं, प्रदेदे, विभीषणः, स्नेहात्, राक्षसलक्ष्म्या, इव, बुद्धिम्, आविश्य, चोतितः।

**शब्दधातुरूपाणि**

निविष्टं - अका. पुं. द्वि एक।
उदधेः - इका. पुं. ष. एक।
कूले - अका. पुं. स. एक।
तं - दका. पुं. द्वि. एक।

प्रपेदे - प्रपेदे, प्रपेदाते, प्रपेदिरे। प्र इत्युपसर्गपूर्वक **पद गतौ** धातोः लिटि प्र. पु. एक।

विभीषणः, चोदितः - रामशब्दवत्।

स्नेहात् - अका. पुं. प. एक।

राक्षसलक्ष्म्या - लक्ष्म्या, लक्ष्मीभ्यां, लक्ष्मीभिः। इका. स्त्री. तृ. एक।

बुद्धिं - बुद्धिं, बुद्धी, बुद्धीः - इका. स्त्री. द्वि. एक।

इव, आदिश्य - अव्य.।

**प्रतिपदार्थः -**

स्नेहात् - அன்பினாலே, बुद्धिं - நற்புத்தியை, आदिश्य - கூறி, राक्षसलक्ष्म्या - ராக்ஷஸ லக்ஷ்மியால், चोदितः इव - தூண்டப்பட்டவன் போல், विभीषणः - விபீஷணன், उदधेः - கடலின், कूले - கரையில், निविष्टम् - தங்கியிருந்த, तं - ராமரை, प्रपेदे - அடைந்தார்.

**व्याकरणविशेषः**

राक्षसलक्ष्म्या - राक्षसानां लक्ष्मीः। तया।

**कोषः**

उदधिः - उदन्वानुदधिः सिन्धुः सरस्वान् सागरोर्णवः।
कूलम् - कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु।
लक्ष्मीः - संपत्तिः श्रीश्च लक्ष्मीश्च।

**भावार्थः**

दक्षिणसागरतटस्तं रामं विभीषणः तस्य बुद्धिमाविश्य राक्षसराजश्रिया प्रचोदितः इव शरणं भेजे।।

(अनुवर्तते....)

# मन्त्रार्थचिन्तनम् - २२ वेदसंरक्षणतपः

**Dr. M. JAYARAMAN**

Krishnamacharya Yoga Mandiram, Chennai

**......ताभिः क्षुधं पाप्मानमपाघ्नन्.....**

तैतिरीयारण्यकम् २.९

## सायणभाष्यानुसारी मन्त्रार्थः

ऋषयः ब्रह्मयज्ञमन्वतिष्ठन्। तत्र तैः कृतं ऋग्वेदोच्चारणं देवानां कृते क्षीराहुतिरभवत्। यजुर्वेदोच्चारणं देवानां कृते घृताहुतिरभवत्। सामवेदोच्चारणं सोमाहुतिरभवत्। अथर्ववेदोच्चारणं च मध्वाहुतिरभवत्। देवाश्च ताभिराहुतिभिः पापरूपां निजबुभुक्षां न्यवारयन्। (ब्रहयज्ञः - श्रौतं नित्यकर्म यत्र अनुदिनं कश्चिद् वेदभागः उच्चार्यते)

## विवरणम्

अयं मन्त्रभागः स्वाध्यायमहिमद्योतके तैत्तिरीयारण्यकस्य स्वाध्यायब्रह्मणे विद्यते। किञ्चित् चिन्त्यमाने इदं स्फुरति यत् - यदि देवानामेव बुभुक्षां ऋग्वेदादिमन्त्रोच्चारणं निवारयेत् किमुत मानवानाम्? मनुष्यैः वृत्तिः देहप्राणसंयोगपरिरक्षकाय अन्नाय क्रियते। यदि वेदोच्चारणमेव वृत्तेः तात्पर्यभूतं क्षुन्निवारणं साधयेत् किमन्यैः क्रियाकलापैः? (अलौकिकं ब्रह्मसायुज्यमपि सार्थस्य वेदाध्यनस्य फलमिति अस्मिन्नेव मन्त्रभागे अग्रे बोधयति कल्याणी श्रुतिः) तस्मात् वेदाध्ययनार्थं बालाः पितृभ्यां प्रेरणीयाः। यदा क्षुच्छमनविषये वेद एव समाश्वसिति किमन्यत् लौकिकं प्रमाणमपेक्षितं स्यात्।

किञ्च, केरलेषु पून्तानम् (१५४७-१६४० सामान्यशके) इति कश्चित् कृष्णभक्तः आसीत्। मलयालभाषायां ज्ञान-प्पान इति तस्य काचित् कृतिरस्ति। तस्मिन् सः वक्ति -

'मध्याह्नार्क-प्रकाशमिरिक्कवे खद्योतत्तयो मानिच्चु कोळ्ळेण्डु उण्णिकृष्णन् मनस्सिल् कळिक्कुं-बोळ् उण्णिकळ् मट्-रु वेणुमो मक्कळाय्' इति।

अस्यायमर्थः - 'यदा मध्याह्नार्कप्रकाशः प्रखरः विद्यते तत्र अल्पप्रकाशप्रदायकेन खद्योतकीटेन किं प्रयोजनम्? यदा बालकृष्णः एव मम हृदये खेलति, किं सन्तानरूपैः बालैः इतरैः?' इति। अनेन पद्येन पून्तानम्-वर्यस्य परमा कृष्णभक्तिः व्यज्यते। लौकिकविषयेषु तस्य वैराग्यं च प्रद्योतते।

इत्थमेव - मम वाचि मनसि च यतः ऋग्वेदरूपं पयः, यजुर्वेदरूपं घृतं, सामवेदरूपः सोमः, अथर्वणवेदरूपं मधु च अस्ति, तर्हि किं प्रयोजनं लौकिकैः पयोघृतसोममध्वादिभिः तत्सम्पादकवित्तेन वा - इति वेदस्य विषये परमा भक्तिः, लौकिकविषयेषु च निस्पृहता वेदेषु बद्धश्रद्धैः परिवर्धनीया।

अस्माकं पूर्वजैः तयैव तीव्रया भक्त्या, संवेगेन च वेदः परिरक्षितः, अस्मभ्यं प्रदत्तः च। तया एव वैदिकपरम्परया भारतीयानां यूनां बुद्धिशक्तिः सङ्गणकादिषु आधुनिकेषु क्षेत्रेषु नितरां चकास्ति विश्वेऽद्य। किञ्च, वैदिकानां शास्त्राणां योग-आयुर्वेदादीनां विषये प्रबोधप्रपित्सवः वैदेशिकाः सर्वमानवाः अहमहमिकया-प्रवृत्त्या समागच्छन्तः सन्ति अद्यापि भारतम्।

तस्मात् यदि सामाजस्य कश्चित् वर्गः सकललोककल्याण-करीम् इमाम् दूरदृष्टिमावाह्य, तीव्रेण संवेगेन, दृढया च श्रुतिभक्त्या, स्वेच्छया, सत्कारभावेन च कष्टे सत्यपि तदूढ्वा वेदंसरक्षणतोपनिरतो भवेत्, तर्हि सकललोकहितं अव्याहतं सिद्ध्येत् इत्यत्र कुतो भवेत् संशीतिः ? एषः खलु सनातनः भारतीयः सम्प्रदायः।

# संस्कृतश्लोकानुरूपः तिरुक्कुरल्

## 102. நாணுடைமை - लज्जाशालिता

श्रीकलियन् रामानुजजीयर् (भूतपूर्वः),
नाङ्गुनेरि

கருமத்தால் நாணுதல் நாணுந் திருநுதல்
நல்லவர் நாணுப் பிற.

लज्जा सा या ह्यकार्येभ्यः त्रपाऽन्या स्यादसौ भुवि।
यां नार्यस्सुललाटा हि प्राप्तवत्यश्चकासति।।

ஊணுடை எச்சம் உயிர்க்கெல்லாம் வேறல்ல
நாணுடைமை மாந்தர் சிறப்பு.

आहारवाससी एवं निद्रादीन्यपि भूतले।
सामान्यानीह सर्वेषां ह्रीर्विशिष्टगुणस्सताम्।।

ஊனைக் குறித்த உயிரெல்லாம் நாண்என்னும்
நன்மை குறித்தது சால்பு.

जीवात्मानस्समस्ता हि देहेष्वत्र प्रतिष्ठिताः।
ह्रियां प्रतिष्ठिता तद्वत् शीलाख्या योग्यता सताम्।।

அணிஅன்றோ நாணுடைமை சான்றோர்க்கு அஃதின்றேல்
பிணிஅன்றோ பீடு நடை.

महतां सज्जनानां हि ह्रीमत्त्वं भूषणं खलु।
ह्रीहीनानां सुगम्भीरा गतिर्व्याधिर्भवेदिह।।

பிறர்பழியும் தம்பழியும் நாணுவார் நாணுக்கு
உறைபதி என்னும் உலகு.

परापवादात्स्वस्मादप्यत्र ये जिहते नराः।
त एव सज्जना लोके सम्मता निधयो ह्रियः।।

நாண்வேலி கொள்ளாது மன்னோ வியன்ஞாலம்
பேணலர் மேலா யவர்.

महान्तः सज्जना लोके ह्रियमेव स्वरक्षिकाम्।
वाटीं स्वीकुर्वते किन्तु नैतां क्ष्मां विस्तृतामपि।।

நாணால் உயிரைத் துறப்பர் உயிர்ப்பொருட்டால்
நாண்துறவார் நாண்ஆள் பவர்.

लज्जाशीला महान्तोऽत्र संघर्षे प्राणलज्जयोः।
प्राणांस्त्यजेयुर्लज्जार्थं न लज्जां प्राणकारणात्।।

பிறர்நாணத் தக்கது தான்நாணா னாயின்
அறம்நாணத் தக்கது உடைத்து.

अतिलज्जावहाद्दोषात्परेषां यो न लज्जते।
निर्लज्जत्वं तदत्र स्यात् धर्मस्य ह्रेपणं भृशम्।।

குலஞ்சுடும் கொள்கை பிழைப்பின் நலஞ்சுடும்
நாணின்மை நின்றக் கடை.

सदाचारादिह भ्रंशः कुलीनत्वं विनाशयेत्।
अकार्यलज्जाशून्यत्वं सर्वमङ्गलदाहकम्।।

நாண்அகத் தில்லார் இயக்கம் மரப்பாவை
நாணால் உயிர்மருட்டி யற்று.

मानसे ह्रीविहीनानां सक्रियत्वं तथा भवेत्।
यथा पुत्तलिका रज्ज्वा सप्राणेवेह लक्ष्यते।।

Articles for SAMSKRITASRI can be sent to:

**editorsamskritasri@gmail.com**

# रूपकावली - बन्धनम्

**Prof. VISHNU POTTY. V.S.**
Kanchipuram

(राजपुरुषकार्यालयः)

ततः प्रविशति चन्दनपुरःसराः वृक्षाः परित्रायध्वम्। परित्रायध्वम्।

**आर्याः** परित्रायध्वम्।

**च्छिन्दन्ति भिन्दन्ति धमन्ति घ्नन्ति**
**लुण्टाकराष्ट्रियजनाः खलरक्षिवर्गाः।**
**स्वल्पीकृतेन तनुषाऽपि कृतोपकारान्**
**वृक्षान् विशिष्य मलयाचलजान् चिराय।। ३**

द्वारपालस्तिष्ठति। चन्दनादयोऽन्तः प्रवेष्टुमिच्छन्ति।

**द्वारपालः** (निवार्य), उच्चैः तिष्ठत। तिष्ठत। कुत्र गच्छथ? किमिदं श्वशुरगृहम् वः? अपि किं परित्राणनं नाम? तदस्माकं कर्म किम्? तत्तु विष्णोः कर्म। अस्माकं पुनः यमस्यैव कर्म। तूष्णीं भवत।

**चन्दनः** सविनयं साञ्जलिः मर्षणीयोऽयं जनः। अत्यन्तं पीडिताः इति सदाचारव्यतिक्रमः सञ्जातः। मर्षयन्तु। मर्षयन्तु।

**द्वारपालः** सरोषं किं मर्षणमस्माकं कर्म? तत्तु न्यायाधीशाधीनम्। तत्रैव विलपन्तु।

**चन्दनः** मा कुप्यः। कृपया श्रृण्वन्तु।

**द्वारपालः** को भवान्। मां श्रावयितुम्।

**चन्दनः** मैवम् चिन्तयन्तु। प्रसीदन्तु।

**द्वारपालः** किं मम प्रेयसी, त्वयि प्रसादयितुम्।

**चन्दनः** बहुदूरादागच्छामो वयम्। निवेदनीयं सङ्कटमस्ति।

**द्वारपालः** किमानीतमुपायनम्? मातुलगृहवत्प्रवेष्टुम्।

**रिक्तपाणिस्तु नो गच्छेत्**
**द्रष्टुं रक्षिजनानपि।**
**तथैव गणकं द्वास्थं**
**राज्यकार्यरतं जनम्।।४।।**

**चन्दनः** किन्तु वयं सङ्कटे पतिताः किल।

**द्वारपालः** तर्हि शीघ्रतायै द्विगुणम्।

**चन्दनः** ननु पश्चादिति शपे।

**द्वारपालः** (दूरभाषणघण्टा) (कर्ण दत्वा) किं दूरभाषणघण्टा। तिष्ठत। आगमिष्यामि। अन्तः गत्वा पुनः निवृत्य आत्मगतं ननु प्रियतमा आसीत्। अस्तु सायं चलच्चित्रं गमिष्यामि। प्रकाशं भो। प्रतिपालयत। अधिकारिणोऽनुमतिं गृहीत्वा कथयिष्यामि। गत्वा पुनरागत्य प्रविश। एकः।

सर्वे निष्क्रान्ताः

(अनुवर्तते....)

## नीतिद्विषष्टिका

**यस्मिन्न बाष्पमोक्षः नापि रहस्यं न च प्रणयजातम्।**
**तन्मित्रं त्यक्तव्यं श्रमेण किन्त्वर्थहीनेन।।**

**எந்த சிநேகிதன் நம் துக்கங்களில் கண்ணீர் விடுவதில்லையோ, நமக்கு ரஹஸ்யங்களை சொல்வதில்லையோ, ப்ரீதியையும் காட்டுகிறதில்லையோ அவனை விட்டுவிடுவதே நலம். ஆனால் பணமில்லாதவன் சிரமத்தால் விடுவான்.**

# அஷ்டாங்க ஹ்ருதயம்

**Prof. S. SWAMINATHAN**
Sri Jayendra Saraswathi Ayurveda College, Poonamallee

**सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत् ।**
**नेक्षेत प्रततं सूक्ष्मदीप्तामेध्याप्रियाणि च ।। ३९**
**मद्यविक्रयसंधानदानपानानि नाचरेत् ।**

आदित्यं सर्वथा न ईक्षेत - சூரியனை வெறும் கண்களால் எப்பொழுதும் பார்க்கக்கூடாது, शिरसा भारं न वहेत् - தலையில் அதிக பாரத்தை சுமத்தல் கூடாது. सूक्ष्मदीप्ता-मेध्या-प्रियाणि- மிகச் சிறியதும், ஜ்வலிக்கக்கூடியதும், அழுக்கானதும், மனதிற்கு பிடிக்காததையும், प्रततं न ईक्षेत च - எப்பொழுதும் பார்க்கக் கூடாது, मद्य-विक्रय-संधान-दानपानानि - மதுபானம் விற்பது, தயாரிப்பது, கொடுப்பது, குடிப்பது போன்றவை, न आचरेत् - செய்யக்கூடாது.

**पुरोवातातपरजस्-तुषार-परुषानिलान् ।। ४०**
**अनृजुः क्षवथूद्गार-कास-स्वप्नान्न-मैथुनम् ।**
**कूल-च्छाया-नृप-द्विष्ट-व्याल-दंष्ट्रि-विषाणिनः ।। ४१**
**हीनान्-आर्याति-निपुण-सेवां विग्रहम् उत्तमैः ।**
**संध्यास्व्-अभ्यवहार-स्त्री-स्वप्नाध्ययन-चिन्तनम्।। ४२**
**शत्रु-सत्र-गणाकीर्ण-गणिका-पणिकाशनम् ।**
**गात्र-वक्त्र-नखैर् वाद्यं हस्त-केशावधूननम्।। ४३**
**तोयाग्नि-पूज्य-मध्येन यानं धूमं शवाश्रयम् ।**
**मद्यातिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत्।। ४४**
**आचार्यः सर्व-चेष्टासु लोक एव हि धी-मतः।**
**अनुकुर्यात् तम् एवातो लौकिकेऽर्थे परीक्षकः।। ४५**

पुरो-वात- கிழக்கிலிருந்து வீசும் காற்று, आतप- வெயில், रजः- தூசு, तुषार - மூடுபனி, परुषानिलान् - புயல் இவைகளையும், अनृजुः - உடலை வளைத்துக்கொண்டு, क्षवथु - उद्गार-कास-स्वप्नान्न-मैथुनम् - தும்மல், ஏப்பம், இருமல், தூக்கம், உணவு அருந்துதல், உடலுறவு கொள்ளுதல், कूल-च्छाया-नृप-द्विष्ट-व्याल-दंष्ट्रि-विषाणिनः - ஆற்றங்கரையின் நிழல், ராஜத்வேஷிகள், துஷ்ட மிருகங்கள், விஷப்பல்லுள்ள ஜந்துக்கள், கொம்புள்ள மிருகங்கள் இவைகளையும், हीना-नार्या-तिनिपुणसेवां - நீசர்கள், ஒழுக்கமில்லாதவர்கள், புத்திக் கூர்மையுள்ளவர் ஆகியவரோடு நட்பும், उत्तमैः विग्रहम्- உயர்ந்தவர்களுடன் பகையும், संध्यासु - மாலை வேளைகளில், अभ्यवहार-स्त्री-स्वप्नाध्ययन-चिन्तनम् - உணவு, உடலுறவு, தூக்கம், படித்தல், ஆலோசித்தல் ஆகியவற்றையும், शत्रु-सत्त्र-गणाकीर्ण-गणिका-पणिकाशनम्- எதிரிகளுடையதும், சத்திரம் மற்றும் பொதுவாக தயாரிக்கக் கூடியதும், நல்லதும் தீயதும் (பத்ய-அபத்யம் கூடியது), விலைமாதர்களாலும், சிற்றுண்டிகளில் தயாரிக்கப்படுவதுமான உணவுகளையும், गात्र-वक्त्र-नखैर्वाद्यं - உடலாலும், வாயினாலும், நகங்களாலும் வாத்யம் இசைப்பதை, हस्त-केशावधूननम् - கைகளையும் தலைமுடியையும் வீணாக உதறுதலையும், तोयाग्नि-पूज्य-मध्येन यानं - தண்ணீர், நெருப்பு, மதிப்பிற்குரியவர்கள், शवाश्रयं धूमं - இவர்களுக்கிடையில் செல்வதையும், मद्याति-सक्ति - மதுபானத்தில் அளவுக்கதிகமான விருப்பத்தையும், स्त्रीषु विश्रम्भ-स्वातन्त्र्ये च - பெண்களை அதிகம் நம்புவதையும், ஸ்வாதந்த்ர்யம் கொடுப்பதையும், त्यजेत् -தவிர்க்கவேண்டும்.

(अनुवर्तते....)

# योगरहस्यम् - २१

**Prof. S. VENUGOPALAN**
SJSACH, Nazarathpet, Chennai

एतावता प्राणायामः यथावकाशं विमृष्टः। तत्र त्रिविधः प्राणायामः रेचक, पूरककुम्भकत्वेन परिगणितः आसीत्। तत्र चतुर्थोऽपि कश्चन विशिष्टः विद्यते इति पातञ्जलं मतम्। तत्र रेचकः बाह्यवृत्तिः श्वासः। अन्तर्वृत्तिः प्रश्वासः पूरकाख्यः। आन्तरस्तम्भकवृत्तिः कुम्भकः कुम्भे जलमिव निश्चलतया प्राणाः अवस्थाप्यन्ते इत्यर्थकतया सः कुम्भकाख्यः तृतीयः। एतेभ्यः त्रिभ्यः अपि व्यतिरिक्तः चतुर्थः बाह्य-आभ्यन्तर-विषयाक्षेपी भवति। अयमर्थः - प्राणस्य बाह्यं नासाद्वादशान्तादिं, आभ्यन्तरं हृदयनाभिचक्रादिं विषयं आक्षिप्य पर्यालोचयतः स्तम्भरूपो गतिविच्छेदः यः सः चतुर्थः प्राणायामः। तृतीयात् कुम्भकात् चतुर्थस्य को विशेषः? इति चेत् तृतीयो यः कुम्भकः सः रेचकमनु, पूरकमनु वा अन्तः बहिः वा कुम्भ्यते इति रेचकपूरकसापेक्षत्ववान् (तृतीयः कुम्भकः) चतुर्थस्तु रेचकपूरकौ अनादृत्य स्वयं निरपेक्षतया जायमानः कुम्भकः यत्र बाह्यो वायुः नान्तः प्रविशति, अन्तरपि वायुना विनैव स्तम्भनं जायते काष्ठवत्। निद्रा-तन्द्रा-जाड्यमित्यादिभिः विघ्नैः आलोड्यमानानां रेचकादित्रितयेन लाभः। तद्रहितानां समभ्यस्तरेचकादि-प्राणायामानां योगसाधनायां उच्चैः स्थितानान्तु चतुर्थः प्राणायामः स्वतः सिद्धो भवति। तथा च एतेषां त्रयाणं, तदुपरि चतुर्थस्य वा विषये सुलभतया अवगमनाय वासिष्ठसंहितायां विवरणं दृश्यते इत्थम्,

प्रस्वेदं जनयेद्यस्तु प्राणायामो हि सोऽधमः।
मध्यमः कम्पनात्प्रोक्तः उत्थाने चोत्तमो भवेत्।। १।।
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवः।
निःस्वासोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ।।२।।
तथापि नश्यतः तेन प्राणायामोत्तमेन हि।
तयोर्नाशे समर्थः स्यात्कर्तुं केवलकुम्भकम्।।३।।
रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः।।४।।
सहितं केवलं वापि कुम्भकं नित्यमभ्यसेत्।
यावत्केवलसिद्धिः स्यात् तावत्सहितमभ्यसेत्।।५।।
केवले कुम्भके सिद्धे रेचपूरकवर्जिते।
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते।।६।।

एवं षड्भिः पद्यैः सकलविधः अपि प्राणायामः सनियमं सङ्गृहीतः भवति।

एवं सर्वविधैरुपायैरपि समनुष्ठिः प्राणायामः चतुर्विधः अपि चित्तसत्वगतः प्रकाशः यः, तस्य यत् आवरणरूपं तन्नामक्लेशरूपं, तत् क्षीयते नश्यति इति पतञ्जलिमहर्षेः अभिप्रायः। तदुच्यते **ततः क्षीयते प्रकाशावरणम्** इति सूत्रम् (२/५२) प्रकाशस्य सत्वस्य आवरणं यत्तमः तत् निद्रा तथा आलस्यादीनां हेतुः सञ्जायते। तस्य क्षयः अनेन भवतीति सूत्रस्यास्याभिप्रायः।। न केवलं एतावदेव, अपि तु यत्र कुत्रापि देशविशेषे चित्तपशोः स्थिरीकरणाय, बन्धनाय

वा योग्यतापि सम्पाद्यते। अस्य अयमर्थः प्राणायामैः क्षीणदोषं मनः यत्र यत्र धार्यते, तत्र तत्र स्थिरीभवति, न क्वचिदपि विक्षेपं भजेत, तदुच्यते सूत्रकारेण **धारणासु च योग्यता मनसः** इति (२/५३)। तथा च धारणा इति अत्रैव अष्टस्वङ्गेषु अन्यतमतया वक्ष्यते। तस्यैव प्राप्तौ चित्तस्य क्षमता योग्यता वा सम्पाद्यते। एवं वक्तुं शक्यते, योगाभ्यासो सर्वाण्यपि अङ्गानि पूर्वपूर्वानुष्ठानदार्ढ्येणैव उत्तरत्र चित्तस्य गतिः भवेत्। तत्र धारणा नाम देशविशेषेषु क्रियते इति अग्रे वक्ष्यते, ते च देशाः के? इति विमर्शे क्रियमाणे, मूलाधार, नाभीचक्र, हृदय, भ्रूमध्य, ब्रह्मरन्ध्र इत्यादिषु देशविशेषेषु एव चित्तं धार्येत। तत्र प्राणायामैः चतुर्विधैरपि रजोगुणकार्यात् मनः चाञ्चल्यात्, तमोगुणकार्यात् आलस्यादेश्च निवारितं मनोयोग्यं भवतीतित्यर्थः।। एवं प्राणायामात् योगिनः बाह्याङ्गानामुष्ठानभाजः आन्तरिकाङ्गानां अनुष्ठाने प्रवृत्तिं कृत्वा सफला भवेयुः इति क्रमशः योगिनां अग्रेऽग्रे इतरेषां योगाङ्गानामनुष्ठाने श्रद्धा भक्त्युत्साहादीनि वर्धेरन्निति अपि फलानि उच्यन्ते।।

(अनुवर्तते....)

### नीतिद्विषष्टिका

**दारैश्च सन्निकर्षो हतदोषतया गृहप्रवेशश्च।**
**यस्य त्वशङ्कनीयौ पर्याप्तं भवति तन्मित्रम्।।**

**எந்த சினேகிதன் நமது பத்னியிடம் பேசினாலும் தோஷமில்லை என்பதிலும், எவன் வீட்டுக்கு வருவதிலும், ஒருவித ஸந்தேஹத்திற்கும் இடமில்லையோ அவனே நல்ல சினேகிதன்.**

# इयत्ताकल्पनमयुक्तम्

**Dr. M. VINOTH**
French Institute of Pondicherry,

वक्तव्यमभिप्रायम् उक्तमभिप्रायं वा समर्थयितुं वयं सर्वे मनुष्याः नूनमेकं प्रमाणं न्याय्यं वा आश्रयामः येन सर्वेऽपि श्रोतारः तं विश्वसेयुः अस्मत्पक्षमङ्गीकुर्युश्च। एतानि एव प्रमाणानि कालान्तरे न्याय्यरूपेण लोकोक्तिरूपेण च परिणतानि, प्रसिद्धानि च अभवन्। न केवलं लोके अपि तु शास्त्रे नैके न्याय्याः प्रयोगार्हतां भजमानाः सन्तः तत्तत्स्थलेषु तं तं विषयं स्पष्टीकर्तुं दृढयितुं वा उपयुक्ताः वर्तन्ते। यथा व्याकरणे शब्दस्य ज्ञाने प्रयोगे वा धर्म इति विचारावसरे कूपखननन्याय्यस्य प्रयोगः। एवंरीत्या नैकेषु शास्त्रेषु नैकेषु स्थलेषु एतेषां लौकिकन्याय्यानां प्रयोगः दृश्यते। तद्रीत्या प्रसिद्धोऽयं न्याय्यः कूपमण्डूकन्याय्यः। कूपेस्थितस्य मण्डूकस्य समानतां भजेत यदा कश्चन व्यक्तिविशेषः तदा अस्य न्याय्यस्य प्रयोगः तत्र क्रियते। किमिदं कूपेस्थितस्य मण्डूकस्य समनता इति चेत् न्याय्यस्य अस्य विवरणमपेक्षते। एकदा कश्चन समुद्रेस्थितः मण्डूकः कदाचित् तीरसमीपम् आगतः। अग्रे गमनावसरे पार्श्वस्थे कस्मिंश्चित् कूपे पतितः। तत्र कूपेऽपि कश्चन मण्डूकः आसीत्। कूपस्थः भेकः समुद्रात् आगतं मण्डूकम् अपृच्छत्- भो मित्र, कुतः आगच्छसि इति। तस्य उत्तरम् अयच्छत् समुद्रभेकः- भो मित्र, अहं समुद्रादागच्छामि इति। तस्य तद्वचनं श्रुत्वा पुनः कूपस्थः भेकः तम् अपृच्छत्- समुद्रो वा, समुद्रः कियान् विशालो भवति इति। तदा समुद्रादागतः भेकः अवोचत्- अतिविशालः समुद्र इति। पुनः कूपस्थः भेक अकथयत्-

विशालो वा, किं चतुरङ्गुलपरिमितो भवति इति। तस्य समुद्रवासी भेक उत्तरम् अयच्छत्- न, ततोऽप्यधिकमिति। पुनश्च कूपस्थः भेक अकथयत्- तर्हि पञ्च वा षडङ्गुलपरिमितो स्यात् इति। पुनश्च समुद्रादागतः भेक वदति स्म- नैव ततोऽप्यधिकमिति। पुनः तद्वचनं श्रुत्वा कूपमण्डूकः कथयति स्म- ततोऽप्यधिकं भवितुमर्हति परं नैतत्कूपमपेक्षया इति। तदा समुद्रवासी भेक अकथयत्- भो मित्र, समुद्रस्तु नूनं कूपमेनम् अपेक्षया बृहदेव इति। तदा कूपेस्थितः मण्डूकः बहुधा हसित्वा अकथयत्- भो मित्र, त्वं तु मिथ्यां वदति। मत्कूपापेक्षया न किञ्चिदपि विशालं वा बृहत् वा भवितुमर्हति इति। एवञ्च यश्च जीवः स्वस्य अल्पशक्त्या बुद्ध्या वा कमपि विषयम् एतावन्तम् इति निर्दिशति तत्र न्याय्यस्य अस्य प्रयोगः भवति।

अधुना एकमुदाहरणं पश्यामः। भगवता श्रीकृष्णेन उदीरीतायां श्रीमद्भगवद्गीतायां द्वितीयाध्याये श्रूयते श्लोकोऽयम्-

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमितः परम्।। इति**

(श्रीमद्भगवद्गीता २.१२)

श्रीकृष्णः अर्जुनं कथयति- यं मां वर्तमानं मन्यसे, सोऽहं न कदाचित् न आसम् अपि तु आसमेव। न त्वं नासीः, आसीरेव। न इमे जनाधिपाः भीष्मादयोऽपि न आसन् किन्तु आसन्नेव। अर्थात् नाहमभूत्वा भवामि, किन्तु प्रागपि भूत्वा इदानीमपि भवामि। यथा अहं तथैव त्वं भीष्मादयोऽपि। किञ्च न वयं सर्वे इतः परम् अस्मात् शरीरादनन्तरं न भविष्यामः, किन्तु भविष्याम एव। एवञ्च अतीतेषु

देहोत्पत्तिविनाशेषु सर्वेषामेव अस्माकम् उत्पत्तिविनाशौ न स्तः। अतः भविष्यद्देहोत्पत्तिविनाशशङ्का नैव कर्तव्या इति पद्यस्य निष्कृष्टार्थः।

भगवत इदं वचनं श्रुत्वा अर्जुनस्य बुद्धौ इदानीमेष अभिप्रायः समुद्भूतः यज्जीवरूपोऽहमपि उत्पत्तिविनाशरहितः श्रीकृष्णवत्। परम् अस्मदपेक्षया भगवान् किञ्चिद्विशिष्ट इति। अधुनात्र अस्य न्याय्यस्य प्रयोगेण अर्जुनद्वारा जीवानाम् अज्ञानम् उद्बोधयितुं शक्नुमः। वयं सर्वे जीवाः कूपमण्डूकसदृशा अर्जुनवत् भगवतः वचनमिदं श्रुत्वैवं चिन्तयामः यत् जीवात्मनामपि उत्पत्तिविनाशौ न भवतः यथा परमात्मनः। परं किञ्चिद्वैशिष्ट्यं वर्तते अस्मदपेक्षया परमात्मन इति। इयं चिन्ता अज्ञानस्य पराकाष्ठा भवति। वस्तुतः भगवता इदं वचनं जीवेषु जन्मस्थितिलयविषये विद्यमानां भीतिं दूरीकर्तुमेव प्रोक्तम्। किञ्च सर्वस्मिन् निस्स्पृशतया भाव्यमित्यतः, यौगिकजीवनं जीवेत् इत्यतश्च अर्जुनद्वारा अस्मभ्यः गीताख्यम् उद्बोधनं कृतं भगवता श्रीकृष्णेन। परम् अज्ञानेन आवृताः वयं सर्वेऽपि जीवाः यथा कूपमण्डूकः मत्कूपापेक्षया न किञ्चिदस्ति विशालात्मक इति चिन्तयति स्म तदा नैतत्संसारसुखापेक्षया महत्तरं किञ्चिद्वर्तते इति प्रतिदिनं चिन्तयन्तः संसारेऽस्मिन्नेव सुखदुःखाभ्यां तरणं कुर्वन्तः सुखप्राप्तये जीवामः। परं यदा ज्ञानस्य प्राप्तयं यतामेह तर्हि नूनं संसारसुखापेक्षया महत्तरं परमात्मैक्याख्यं सुखं प्राप्नुम इत्यतः तस्य प्राप्तये प्रयत्नं कुर्मः येन अलभ्यम्, असुलभम्, अतुल्यञ्च स्थानम् अवश्यं प्राप्नुमः। अतश्च कूपमण्डूकवत् अस्माकम् अल्पात्मिकया बुद्ध्या सर्वतोत्कृष्टस्य परमात्मनः स्वरूपस्य शक्तेः वा इयत्ताकल्पनमयुक्तमिति।।

# त्रिविधमौषधम् - ९

**Sri.S.BALASUBRAMANIAN**
**Ms. B. RENGA PADMINI**
IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

इह प्रस्तुतौ वयं रसशास्त्रे मन्त्रस्य प्रयोगविषये पश्यामः। रसशास्त्रस्य लोहवादे प्रयोगः भवति लोहादिधातवः सुवर्णादिधातवः विशिष्टसंस्कारानुसारेण लोहपरिवर्तनं प्राप्नुवन्ति। नागार्जुनाचार्येण **देहवाद** इति सिद्धान्तः ख्यापितः। रसादिधातूनां शोधनादिसंस्कारैः रोगचिकित्सार्थं प्रयोगं कर्तुं शक्नुमः। चरकसुश्रुतसंहितयोः धातुविषये उक्तं भवति, परन्तु तस्य शोधनादिविषये न किमपि उक्तं भवति । देहवादसिद्धान्तेन एव रसशास्त्रस्य पुनर्जन्म भवति। रसशास्त्रं रसेश्वरदर्शनानुसारेण भवति।

रस इति शब्दस्य बहवः अर्थाः भवन्ति।

रसः मधुरादि षट् भवति। रसः सप्तधातूनां अग्रधातुः भवति, उत्तरधातूनामाप्यायनत्वात्। रसशास्त्रे रसशब्दस्य एते एव अर्थाः भवन्ति।

**रसत्वात् द्रवत्वात् रसः।** (रसार्णव)

**रसनात् सर्वधातूनां रस इत्यभिधीयते।** (रस रत्न समुच्छय)

**रसति भक्षति सर्वान् लोहान् इति रसः।**

**रसनात् अभ्रकादीनां धातूनां कीर्तितो रसः।** (रस तरङ्गिनी)

**जरारुक्मृत्युनाशाय रस्यते वा रसः स्मृतः।**

(रसरत्नसमुच्छय)

रस शास्त्रे रसः द्रवगुणयुक्तं द्रव्यं भवति। अन्यधातून् भक्षयति। धातुशब्देन इह रसशास्त्रे लोहादिपरिग्रहः। रसशास्त्रस्य मुख्यत्वम्। उक्तं हि -

**पिण्डपाते तु यो मोक्षः स च मोक्षो निरर्थकः।**
**पिण्डे तु पतिते देवि गर्दभोऽपि विमुच्यते।।** (रसार्नव)

रससिद्धाः रसशास्त्रानुसारेणैव मोक्षं प्राप्नुवन्ति। कस्मात् ? सर्वगुणयुक्तं रसं मण्डपे स्थापयित्वा तस्य मण्डपस्य आग्नेयमूले एकं रसलिङ्गं स्थापयित्वा तस्य मूर्तिम् अभ्यर्च्य वक्ष्यमानानि फलानि अवाप्नुवन्।

**लिङ्गकोटिसहस्रस्य यत्फलं सम्यगर्चनात्।**
**तत्फलं कोटिगुणितं रसलिङ्गार्चनाद्भवेत्।।**
**ब्रह्महत्यासहस्राणि गोहत्याश्चायुतानि हि।**
**तत्क्षणाद्विलयं यान्ति रसलिङ्गस्य दर्शनात्।**
**स्पर्शनात्प्राप्यते मुक्तिरिति सत्यं शिवोदितम्।।**

(रसरत्नसमुच्छयः)

अथ अर्चनविधिः

**आग्नेय्यां श्री अघोरेण मन्त्रराजेन चार्चयेत्।**
**अष्टादशभुजं शुभ्रं पञ्चवक्त्रं त्रिलोचनम्।।**
**प्रेतरूढं नीलकण्ठं रसलिङ्गं विचिन्तयेत्।।**

(रसरत्नसमुच्छयः)

कः मन्त्र इति विषये वयं न कथितुं शक्नुमः। रसविद्या रहसि, **एव वेदनीयं। किमर्थमिति चेत् आगमात्,** (रससिद्धोक्तत्वात्)। तथाऽपि रसरत्नसमुच्छये उक्तः,

**रसविद्या दृढं गोप्या मातुर्गुह्यमिव ध्रुवम्।**
**भवेत्वीर्यवती गुप्ता निर्वीर्या च प्रकाशनात्।।**
**रोगिणां बहुभिर्ज्ञातं भवेन्निर्वीर्यमौषधम्।**

न रोगिविदितं कार्यं बहुभिर्विदितं तथा?

इति कायचिकित्सायां मन्त्रस्य प्रयोगं वयं दृष्टवन्तः। कौमारभृत्ये मन्त्रप्रयोगम् अग्रिमप्रस्तुतौ पश्यामः।

(अनुवर्तते....)

# शास्त्रं ज्योतिः प्रकाशार्थम् - ५

**Ms. DHWANI J.**

IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

चरकोक्तम् आचार्यपरीक्षाविधिमुपयुज्य विद्यालयपरीक्षाविषये चर्चा प्रचलन्ती भवत्यस्माकम्।

**ततोऽनन्तरमाचार्यं परीक्षेत; तद्यथा - पर्यवदातश्रुतं परिदृष्टकर्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहङ्कृत-मनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनसमर्थं चेति। एवङ्गुणो ह्याचार्यः सुक्षेत्रमार्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पादयति।।** (चरकसंहिता - विमानस्थानम् - ८.४)

वाक्येऽस्मिन् पर्यवदातश्रुतमित्यारभ्य जितहस्तमिति यावत् गतमासे चर्चितम्। अपरमुच्यते - उपकरणवन्तमिति। तत्र उपकरणं नाम प्रधानाङ्गीभूतोपकारकद्रव्यमिति शब्दकल्पद्रुमः। दत्तमुदाहरणं नृपादीनां छत्रचामरादि। यथा च वैद्यकीये उच्यते **करणं पुनर्भेषजम्** इति। ननु समर्थस्यापि वैद्यस्य चिकित्सासाधनार्थं भेषजरूपस्य करणस्य अपेक्षा भवत्येव। तद्विनाऽपि कदाचित् चिकित्सा साध्वी स्यात्, किन्तु प्रायः क्लिष्टा सा। तथैव विद्यालये समर्थानाम् अप्यध्यापकानां कानिचन करणानि अपेक्षन्ते। तद्यथा - पठितविषयाणां वास्तविकानुभवार्थं प्रयोगशालाः युज्यन्ते। केषुचित्तु विद्यालयेषु नियमानुसारं साक्षाद्दर्शनीयाः अपि वैज्ञानिकविषयाः केवलं पुस्तकैः सिद्धान्तमात्ररूपेण पाठ्यन्ते। तन्न जातु युक्तं स्यादुचिते क्वचिदपि

विद्यालये। Smart Class इत्युच्यमानाः प्रौद्योगिककक्षास्तु तत्पश्चादेव चर्चायां समागमिष्यन्ति। यथोचितं पाठनार्थानां सुविधानामुपलब्धिः समीक्षणीया बुद्धिमद्भिः प्रागेव विद्यालययोजनात्। अपरमुच्यते **सर्वेन्द्रियोपपन्नमि**ति। विषयि इन्द्रियमुच्यते। यस्य ग्राह्यः विषयः अर्थः भवति, स एव इन्द्रियसंज्ञकः। इन्द्रिययुक्तः प्राणी कश्चित् यथैव परिस्थान् विषयान् शब्दस्पर्शरूपरसगन्धान् गृह्णाति, तथैव इन्द्रिययुक्तः विद्यालयः स्वपरिस्थान् विषयान् गृह्णीयात्। इन्द्रियं खलु प्राणिनं बहिर्लोकविषयज्ञानेन बोधयति। कार्यमिदं विद्यालये विद्यालयस्थैरेव क्रियेत। सरस्वतीमातृरूपस्य विद्यालयस्य ज्ञानकर्मेन्द्रियाणि तत्सञ्चालकाध्यापकसेवकादयः एव। तेषां सुष्ठु बहिर्लोकज्ञानं स्याद्येन च ज्ञानेन ते विद्यालयम् अवगमयेयुः। कथमिव इन्द्रयोपपन्नत्वमिदं मेयमस्माभिः? यदि विद्यालयः वार्ताज्ञः स्यात्तर्हि तच्छात्राः परितः प्रचलतां कार्यक्रमाणां विषये अवगताः स्युः। तेषां तत्र संमेलनं भवति न वेत्यपरः प्रश्नः। निरिन्द्रियविद्यालयानां छात्राः, कदाचिदध्यापकाश्चापि छात्रप्रगतिसंबद्धैः परितः प्रचलद्भिः परीक्षास्पर्धादिभिः न सूचिता भवन्ति। आधुनिके काले कक्षायाः बहिस्तादपि ज्ञानं प्रवीणत्वं च वर्धापयितुं नैके अवसराः सन्ति। यथोचितं तान् प्रति छात्राणां विवृतिः साम्प्रतिकस्य भविष्यतश्च स्पर्धामयकालस्य संमुखीकरणार्थम् अनिवार्या एव।

अपरमुच्यमानं पदं लघु अपि बृहदर्थधारकं वर्तते - प्रकृतिज्ञमिति। प्रकृतिस्तु सा या स्वाभाविका भवति। छात्रप्रकृतिज्ञ एवाध्यापकः उचिते ज्ञानप्रदाने समर्थतमस्तिष्ठति। अत एव B.Ed पाठ्यक्रमे Student Psychology अर्थात् छात्रमनोविज्ञानमपि

विद्यमानोऽस्ति। सामान्यां छात्रप्रकृतिमतिरिच्य संप्रति दिव्याङ्गा इत्युच्यमाना अपि केचन छात्रा वर्तन्ते ये पृथक् अनुरागमवाप्नुयुः। केचन दिव्याङ्गच्छात्राः बुद्धिशरीरविकृताः पृथक्तया तेभ्यः समर्पितान् विद्यालयान् प्राप्य शिक्षां गृह्णन्ति, केचन च अनन्यविद्यालयानेव आश्रयन्ते। कथञ्चिदपि तेषां छात्राणां सुष्ठु पालनार्थं तेषां प्रकृतिज्ञता अपेक्षिता भवति। इयमपि प्रकृतिज्ञता प्रागेव नामाङ्कितानां छात्राणामभिप्रायैः मातुं शक्या। प्रतिपत्तिज्ञमिति। प्रतिपत्तिः प्रतिपादनं प्रवृत्तिर्वा उच्यते। सैषा प्रतिपत्तिः छात्रेभ्यः विद्यालयस्य ज्ञानोत्पादनसामर्थ्येन मेया। प्रतिपत्तिज्ञत्वमपि उपस्थितच्छात्रैः सह संभाषणेन, तेषां परीक्षादिषु अङ्कदर्शनेन वा ज्ञेयम्। **अनुपस्कृतविद्यमिति**। तत्र चक्रपाणिव्याख्या इत्थं भवति - **अनुपस्कृतविद्यमिति शास्त्रान्तरज्ञानेन नास्त्येवोपस्कृता विद्या यस्य स तथा; य आयुर्वेदज्ञः सञ्शास्त्रान्तरेणापि संस्कृतो भवति, स तु नितरामुपादेयः** इति। अन्यत् शास्त्रं किल शास्त्रान्तरमुच्यते। विद्यालये छात्राणामाद्यं कर्तव्यं पठनमेव। तदतिरिच्य क्रीडाललित-कलादीनामपि वर्धनम् अङ्गीकृतमेव। यः विद्यालयः ज्ञानदानमिति स्वप्रधानलक्ष्यं विस्मृत्य क्रीडाललितकलाभ्यः अत्यधिका श्रद्धां प्रददाति स एव उपस्कृतविद्यः इति वक्तुं शक्यते। यस्मिन् विद्यालये ज्ञानदानकार्यं सुष्ठु चलेदिति अनिवार्यम्। तदतिरिच्य अपरैरपि कार्यक्रमैः यः विद्यालयः स्वच्छात्रान् संस्करोति, स नितरामुपादेयः एव, न तु स यः प्रधानं लक्ष्यं विहाय कार्यान्तरेष्वेव विद्यालयस्य नामोन्नतिकाङ्क्षया छात्रान् व्यस्तान् करोति। तदनन्तरम् अनहङ्कृतमिति। अहङ्कारस्तु विद्यालयस्य नामाङ्कनवेलायां मीयते। छात्रनामाङ्कनवेलायां

तत्कार्यकर्तॄणाम् अनम्रता, बहुरूप्यकाभियाचना इत्यादिभावाः अहङ्कारत्वं दर्शयन्ति। ते विद्यालयाः यथाशक्ति त्याज्याः। **अनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलम्** इति इमे भावाः प्रायः व्यक्तिगताः एव। तेषां परीक्षा छात्रपरिप्रश्नेनैव साध्या दृश्यते। **अध्यापक**मिति अध्ययनकारणे समर्थम्। तत्र युक्ताः अध्यापका एव विद्यालयस्य अध्यापकत्वं निरूपयति। **ज्ञापनसमर्थ**मित्यपि अध्यापकगुणनिभृतः गुण एव।

लक्षणकथनमभिधायोच्यते **एवङ्गुणो ह्याचार्यः सुक्षेत्रमार्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पादयति** इति। चर्चितगुणयुक्तो हि विद्यालयः सुशिष्यं विद्यया दीयमानैः गुणैः सम्पादयति, यथा ऋतुभवो मेघः सुभूमिं शस्यगुणैः पोषयति।

मई मासः प्रायः विद्यालयचयने मुख्यः भवत्यधुना। अत्रास्मच्चर्चा विद्यालये शिशूनां योजनेच्छुकानां साहाय्यं क्रियादिति अभिलाषा। अपरे मासे चरकोक्तमपरं कञ्चिद्विषयमुद्धृत्य चर्चां करिष्यामः।

(अनुवर्तते....)

### नीतिद्विषष्टिका

**पक्षद्वयशशिसदृशानि अनिशं हार्दानि सदसतां लोके।**
**आप्यायन्ते तु सतां असतां च परिक्षयं यान्ति।।**

**ஸஜ்ஜனங்களின் ஹார்தமான பழக்கங்கள் சுக்லபக்ஷ சந்திரன் போல் தினந்தோறும் வளரும். அஸஜ்ஜனங்களின் பழக்கங்களில் கிருஷ்ணபக்ஷ சந்திரன் போல் தினந்தோறும் குறைந்து வரும்.**

# सा भक्तिरित्युच्यते

## (महास्वामिनां वचः समुद्धरणपूर्वकम्)

**Dr. S. THIAGARAJAN**
Department of Sanskrit, SCSVMV, Kanchipuram

मामेव मह्यं देहीति चिन्तया युक्ता आत्मार्पणरूपा या भक्तिः सा एव भक्तिरिति परमाचार्याणां वचांसि अस्मान् बोधयति स्म इति दृष्टवन्तः गते मासे। तत्र का नाम भक्तिरिति श्रीमच्छङ्करभगवत्पादाः शिवानन्दलहर्याः एकेनैव पद्येन अस्मान् बोधयन्ति। सोऽयं प्रसङ्गः परमाचार्यैः इत्थं प्रतिपादितः -

भक्तोऽपि भगवानेवेति भावनया, सारतः नान्यः भगवान् न वान्यः स्वयमिति अनुभवज्ञानेन साकम् ईश्वरं भक्त्या अनुभूय बहवः अद्वैतज्ञानिनः अभूवन्। श्रीमधुसूदनसरस्वतीस्वामिनः, श्रीमदप्पय्यदीक्षितेन्द्राः, श्रीसदाशिवब्रह्मेन्द्राः, श्रीभगवन्नामबोधेन्द्रा इत्येते परमज्ञानिन ईदृशमेव भक्तिमार्गं समाश्रितवन्तः। निर्गुणस्य ब्रह्मणः अनन्तकल्याणगुणयुक्तस्य ईश्वरस्य च मध्ये एते कमपि भेदं नैव ददृशुः। यन्निर्गुणं निष्कलं च वस्तु योगिनः ध्याने अनुभवन्ति तदेव यमुनातीरस्य सिकताप्रदेशेषु नीलज्योतिः प्रवाह इव कूर्दन्तं धावन्तं कृष्णमिव पश्यामि इति वदति आचार्यः मधुसूदनसरस्वती। ज्ञानिनः सर्वमपि देवताप्रतिबिम्बं तदेकमेव ब्रह्म इति जानन्ति चेदपि ज्ञानावाप्तेः परमपि तेषु देवताप्रतिबिम्बेषु पूर्वकाले यद्रूपं मनःप्रह्लादकमासीत् तस्मिन् विशिष्टां भक्तिं स्थापितवन्तः।

अद्वैतज्ञानरत्नाकराः श्रीमच्छङ्करभगवत्पादाः सर्वामपि देवतां ब्रह्मस्वरूपमित्येव निधाय स्तोत्राणि रचयामासुः।

श्रीमच्छङ्करभगवत्पादाः शिवानन्दलहर्यां भक्तिलक्षणम् अत्यद्भुतरूपेण वर्णयन्ति। तत्र उदाहरणपञ्चकं प्रददतः वर्णयन्ति। तद्यथा-

**अङ्कोलं निजबीजसन्ततिरयस्कान्तोपलं सूचिका**
**साध्वी नैजविभुं लता क्षितिरुहं सिन्धुः सरिद्वल्लभम् ।**
**प्राप्नोतीह यथा तथा पशुपतेः पादारविन्दद्वयं**
**चेतोवृत्तिरुपेत्य तिष्ठति सदा सा भक्तिरित्युच्यते ।।**

शिवानन्दलहरी ६१

अङ्कोल इति वृक्षः अस्ति। तस्य फलानि पक्के सति भूमौ पतित्वा भग्नतामाप्नुवन्ति। सपदि तदन्तर्विद्यमानानि बीजानि कयापि आकर्षणशक्त्या चालं चालं पुनः तस्मिन्नेव वृक्षे संयुञ्जते। ततश्च मूलभूते तस्मिन्नेव वृक्षे विलीनतामाप्नुवन्ति इति श्रूयते। भगवतः विघटीभूय समागताः वयमपि इत्थमेव सर्वदा तं प्रति चालं चालम् अन्ते तस्मिन्नेव भगवति संयुक्षीमहि। सूचिकायाः अयस्कान्तोपलं प्रति क्षिप्रसंयोगः अपरम् उदाहरणम्। यथा अयस्कान्तेन युक्तायाः सूचिकायाः अपि समुद्भूता आकर्षणशक्तिः इतरान् अयःपदार्थान् आकर्षति तथा भगवतः गुणैः आकृष्टस्य भक्तस्यापि तादृशाः गुणाः शक्तयश्च उद्भविष्यन्ति इति अनेन उदाहरणेन प्रदर्शयति आचार्यः। ततः पतिव्रतायाः उदाहरणम्। यथा पतिव्रतायाः चिन्तनम्, भाषणम्, कार्यम् इति सर्वमपि पतिं परित एव भवति तथा अस्माकमपि मनोवाक्कार्याणि भगवन्तमुद्दिश्यैव भवेयुरिति अस्मात् ज्ञायते। श्लोके पत्यर्थे विभुशब्दः प्रयुक्तः भगवत्पादैः। सर्वव्यापकः इति तदर्थः। अनेन भगवन्तं क्वचिदेकत्र एवेति न मत्वा सर्वव्यापृतः सर्वस्वरूप

इति च भावयेदिति द्योत्यते। अनन्तरं लतायाः उदाहरणम्। आश्रितवृक्षां लतां वयं तस्माद्वृक्षात् ईषत् अपसर्पयामः चेदपि सा अतिक्लिन्ना क्षणान्तरे एव पुनः तमेव वृक्षं समाश्रयति। अस्मन्मनः ईश्वरस्मरणात् चञ्चलितं सत् असंख्याकैः प्रतिघातैः बाधते चेदपि अस्मल्लक्ष्यं नैव जह्याम इति अनेन दृष्टान्तेन आचार्यः बोधयति। अन्ते च नदीसमुद्रयोः उपमानम्। इदमेव परममद्वैतमस्ति। समुद्रजलं वृष्टिरूपेण नदीं प्राप्य प्रवहति। उभयमपि न भिन्नं जलम्। नदी कस्मादपि पर्वतात् समुद्भवतु अनायासेन प्रवाह्य अन्ते समुद्रमेव श्रित्वा आत्मनाम रूपं च हित्वा समुद्ररूपेणैव परिवर्तते । समुद्रमपि तां नदीम् उररीकुरुते। अत एव नदीसंगमात् ईषद्दूरे तस्याः जलं क्षाररसयुतं भवति। इत्थमेव वयमपि शुद्धां भक्तिं भजामहे तर्हि करुणासिन्धुर्भगवान् स्वयं पुरतः समागम्य अस्मान् आत्मसात्करोति। आदौ आरम्भदशायां धनमपेक्षितम्, ऐश्वर्यमपेक्षितमिति व्यापाररीत्या भक्तिसेवनेऽपि भगवतः गुणविशेषहेतोः भगवदर्थमेव भगवति प्रीतिभजनपक्वतां क्रमशः प्राप्नुयाम। अन्ते च वयमपि गुणविशेषरहितपरमात्मस्वरूपेण विलीनाः भूत्वा तद्रूपमाप्नुयाम।

लौकिकरीत्या सुष्ठु जीवनयापनार्थं द्वैत-विशिष्टाद्वैत-अद्वैतसिद्धान्तानामनुभवार्थं वा भक्तीत्ययं विषयः अत्यावश्यकः भवति। मोक्षप्राप्तये अनुसरणीयेषु उपायेषु प्रधानः उपायः भक्तिरेव इति निगदन्ति भगवत्पादाः । ततः पश्चात् आत्मस्वरूपानुसन्धानम् एव भक्तिः इत्यपि कथयन्ति। तद्यथा -

**मोक्षसाधनसामग्र्यां भक्तिरेव गरीयसी ।**
**स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते ।।** इति

(अनुवर्तते....)

# ADVANCED NUMBER THEORY IN A VERSE OF KALIDASA

**Prof. Dr. N. KANNAN,**
Head, Department of Oriental Studies & Research,
SASTRA - Deemed to be Unviersity,Thanjavur.

There can be no doubt that the poet Kalidasa of Sanskrit stands pre-eminent in the catalogue of glories of world literature. His lyrics and drama stand as a treasure-house of knowledge evincing the fact that he was a versatile genius who recognized no demarcation between Arts and Science as is prevalent today. Here is an attempt to reveal the inexhaustible fund of Mathematical findings skillfully concealed in a single verse of Kumarasambhava (कुमारसंभवम्).

As all the alphabets of Sanskrit language could represent various numbers using the **Katayapapaya coding** or the Vedic Numerical code, higher principles of Mathematics were deftly paraded by the poet, attired in beautiful and picturesque poetry, to be read, studied and enjoyed.

In the first canto of Kumarasambhavam (कुमारसंभवम्), the description of Himalayas in the third verse leaves one aghast at the Mathematical skill of Kalidasa.

1. Third Verse of Kumarasambhavam (कुमारसंभवम्)

**अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।**
**एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।।**

(canto 1 - verse 3)

**2. Meaning of the Verse:**

Snow could not be a destroyer of beauty in the case of Himavan who is the source of countless jewels; for one blemish is lost in a host of virtues, like the spot on the moon in her rays.? (M.R. Kale)

**3.Vedic Numerical Coding (or) Katapaya Coding:**

Vedic Scholars adopted a different but more convenient system of letter-notation for numbers, called Katapayadi or Vedic Numerical code.

In this system of representation, the Sanskrit consonants (vyanjanas) beginning with क, ट, प and य represent the digits from 1 to 9 ending with 0 (i.e. letters from क to ञ denote 1 to 9 and 0 respectively and so on)

The nasals ञ and न denote 0;

the case of conjunct consonants, the number denoted by the last consonant only is taken;

- The vowels following consonants have no

value; and

The vowels not preceded by consonants represent 0. The arrangement of the digits is from right to left.

The entire representation is shown in the form of a table as below:

TABLE 1. VEDIC NUMERICAL CODE:

| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 0 |
|---|---|---|---|---|---|---|---|---|---|
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण | त | थ | द | ध | न |
| प | फ | ब | भ | म | | | | | |
| य | र | ल | व | श | ष | स | ह | ळ | क्ष |

**4. Justification for the existence of Mathematics in the Stanza:** Kalidasa himself has given clues by the use of several Mathematical terms in this stanza like अनन्त (infinity), एकः (one), गुण (multiplication) and अंकः (number or 9). The poet has concealed deftly, as though a left hand play, the wonders of Mathematics.

5. Decoding of the Verse of Kumarasambhavam (कुमारसंभवम्) The decoding of the whole verse is shown in four lines by Table 2 given below:

TABLE 2

| Syllables | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| Line1 | 0 | 0 | 6 | 2 | 0 | 2 | 4 | 4 | 1 | 1 | 1 |
| Line2 | 8 | 5 | 0 | 7 | 4 | 1 | 4 | 3 | 1 | 8 | 6 |
| Line3 | 0 | 1 | 8 | 8 | 6 | 3 | 5 | 7 | 0 | 1 | 6 |
| Line4 | 0 | 5 | 8 | 6 | 8 | 1 | 2 | 5 | 4 | 4 | 1 |

**6. Converting decimal into a fraction:**

The opening word अनन्त रत्न (Ananta - Ratna) of the stanza is decoded as in Table 3:

| Table 3 | | | | | |
|---|---|---|---|---|---|
| Syllables | अ<br>A | नं<br>nan | त<br>ta | र<br>Ra | त्न<br>tna |
| Decoding (Direct order) | 0 | 0 | 6 | 2 | 0 |
| Decoding (in Reverse order) | 0 | 2 | 6 | 0 | 0 |

Sri Jayatirtha or Seer Jayatirtharu (also known as Tikacarya), who lived between 1365 AD and 1388

AD, was the sixth pontiff of Sri Madhvacarya P?tha. He was one of the most important seers in the Dvaita philosophy who elucidated Sri Madhvacarya-s philosophy clearly and lucidly so as to be understood by the common man.

According to him every word in a Vedic mantra should be repeated thrice to get its full essence. Following his footsteps and considering Kalidasa's verse equivalent to a Vedic mantra in its potency, the word अनन्तरत्न (Ananta - Ratna) is repeated thrice to get the poet-s complete intended sense.

a) The rule of reading the decoded number is from right to left (अङ्कानां वामतो गतिः) Hence अनन्तरत्न (Ananta - Ratna) is decoded as 02600 in the first step.

b) The word अनन्त रत्न (Ananta - Ratna) can also be split as अनन्तर+त्न (Anantara+tna) which will mean **after the decimal point**, the letter त्न being decoded as the number zero (0) acting as the decimal point. Hence अनन्तरत्न (Ananta - Ratna) is decoded as 0.02600 in the second step.

c) Since अनन्त (Ananta) refers to infinity, repeating the five digits occurring after the decimal

point infinite number of times, the following infinite decimal is obtained as the full decoded number represented by the word अनन्तरत्न (Ananta - Ratna). Name it as x for convenience:

**X=0.2600,2600,2600,2600,....... (1)**

This infinite decimal is now converted into a rational number of the form a/b (where a and b are integers) by the following usual Mathematical method:

**1000x = 2600.2600, 2600, 2600 (2)**

Subtracting (1) from (2), we get,

9999x = 2600 which yields

**X=2600/9999 (3)**

Note that the decimal parts in (1) and (2) are identical and hence get cancelled with each other during subtraction.

**7. Error in the First Line:**

The mountain of Himalayas was the source of innumerable gems (अनन्त रत्न). Here the poet implicitly indicates that his verse is also the source of several gems of Scientific findings.

Now we consider the decoding of the next four syllables प्रभवस्य (Prabhavasya) which is exhibited in Table 4.

| Table 4 | | | | |
|---|---|---|---|---|
| Syllables | प्र pra | भ bha | व va | स्य sya |
| Decoding (Direct order) | 2 | 4 | 4 | 1 |
| Decoding (Reverse order) | 1 | 4 | 4 | 2 |

The number indicated by the first nine syllables अनन्त रत्न प्रभवस्य (Ananta ratna prabhavasya) of the stanza is shown in equtaion (4).

$$1442 + x = 1442.2600,2600,2600, \quad (4)$$

which can be converted into a rational form as below :

$$=1442 + x$$
$$= 1442 + 2600/9999$$
$$= 14418558+2600/9999$$
$$= 14421158/9999 \qquad (5)$$

[To be Continued.....]

**नीतिद्विषष्टिका**

सत्सङ्गमस्य नार्घः कर्तुं प्रभवतीति मे मतिर्भवति।
यत्तद्वियोगदुःखं तदेव मूल्यं भवति तस्य।।

ஸத்ஸங்கத்திற்கு விலை மதிப்பிட முடியாதென்று நான் நினைக்கிறேன். அதன் பிரிவால் ஏற்படும் துக்கமே அதற்கு விலை.

# पदरञ्जनी - १०

**Dr. N. SRIDHAR,**
**SCSVMV, Kanchipuram**

(अस्य समीचीनमुत्तरं editorsamskritasri@gmail.com प्रति ई-मैल् कर्तुमपि शक्नुवन्ति। समीचीनोत्तरप्रदातॄणां नामप्रकाशनम् अग्रिमसञ्चिकायाम्।)

| 1 | 2 |  | ■ | 3 |  | ■ | 4 | 5 |  |
|---|---|---|---|---|---|---|---|---|---|
| 6 |  | ■ | 7 |  | ■ | 8 |  |  | ■ |
|  | ■ | 9 | ■ | 10 |  |  | ■ | 11 |  |
| ■ | 12 |  | 13 |  | ■ | ■ | 14 |  | ■ |
| 15 | ■ | 16 |  | ■ | 17 | ■ |  | ■ | 18 |
| 19 | 20 |  | ■ | 21 |  |  |  | ■ |  |
| 22 |  |  | ■ | 23 |  | ■ | 24 | 25 | ■ |
|  | ■ | ■ | 26 |  | ■ | 27 |  |  | ■ |
| ■ | 28 |  |  | ■ | 29 |  |  | ■ | 30 |
| 31 |  | ■ |  | ■ | 32 |  | ■ | 33 | ■ |
| 34 |  | 35 | ■ | 36 |  | ■ | 37 | ■ | 38 |
| 39 |  |  | ■ | 40 |  | ■ | 41 |  |  |
| 42 |  | ■ | 43 |  | ■ | 44 |  | ■ | ■ |

## वामतः दक्षिणम्

१. पानेच्छुः, तृषितः (३)
३. वाराणसी (२)
४. मिथ्या, अनृतम् (३)
६. माता, उपमाता (२)
७. भार्या, पत्नी (२)
८. नर्तकी (३)
१०. विश्वामित्रमुनिः (३)
११. सुजन्मा (२)
१२. कामकोटीस्थलम्, शक्तिपीठेषु अन्यतमनगरी (४)

१४. गतिः, बन्धः, गूढपुरुषः (२)
१६. गजः, पिप्पिली (२)
१९. जॄ धातोः लिट्-लकारस्य प्र.पु. / उ.पु. एकवचनम् (३)
२१. साधूनाम् आचरणम् (४)
२२. पीडा (३)
२३. दण्डः, बाह्येन्द्रियनिग्रहः (२)
२४. सीवनयन्त्रम् (२)
२६. वृक्षाणां महान् समूहः (२)
२७. भक्षणं, भोजनम् (३)
२८. वनवासी, श्रीरामस्य मित्रम् (सम्बोधने) (३)
२९. बहवः योगपुरुषाः (३)
३१. यस्मिन् काले (२)
३२. विषम् (२)
३४. शरीरावयवः, कट्याः पुरोभागः (तत्पर्यायः सम्बोधने) (३)
३६. जपा, ओड्रपुष्पम् (२)
३९. मकरयुक्ता पौर्णमास्या (३)
४०. उपरिविद्यमानलोकेषु अन्यतमः (२)
४१. चन्द्रः (३)
४२. पुरुषः (२)
४३. वाहनम् (२)
४४. सूर्यः, अग्निः (२)

**उपरिष्टात् अधः**

१. छादनम् (३)
२. पात्रम् (२)
३. बन्धनगृहम् (४)
४. भवसि (२)
५. कृष्णेन बाल्ये हतः कश्चन असुरः (४)
८. आर्द्रतण्डुलः (२)
९. सृष्टेः उत्पत्त्यर्थं महाभूतानाम् संयोगः (५)
१३. पात्रम्, कौपीनम् (२)
१४. कृष्णः, चाणूरस्य हन्ता (६)
१५. कुबेरः (४)
१७. षद् धातोः लट्-लकारे उ.पु. बहुवचनम् (३)
१८. किरणः (२)
२०. जै-धातोः लोट्-लकारे म.पु. एकवचनम् (२)
२१. गृहम् (३)
२५. पताका, ध्वजः (२)

२६. मुखम् (३)

२७. सूर्यः, अग्निः, राक्षसः (३)

२८. सूर्यः, निदाघा (उष्णाः) कराः (किरणानि) यस्य (५)

२९. अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपाध्मानीयः (४)

३१. यज्ञकर्ता, अध्वरेः आदेष्टा, व्रती, यष्टा (तत्पर्य्यायः सम्बोधने) (४)

३५. स्त्री, नारी (२)

३६. भोजनम्, जेमनम् (३)

३७. मध्यरात्रिः (३)

३८. राहुग्रहः (२)

**एकाक्षरी**

३०. भैरवः (साहाय्यार्थम् एकाक्षरीकोशः द्रष्टव्यः)

३३. झञ्झावातः

## पदरञ्जनी - ९ (उत्तराणि)

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| वे [1] | क [2] | टः | | य [3] | ब [4] | नः | | शो [5] | षः |
| प [6] | टुः | | अ [7] | ज | न्यम् | | ऋ [8] | णम् | |
| थु | | सु [9] | मि | त्रः | | व [10] | क्षः | | चा [11] |
| | वि [12] | | त्रः | | वि [13] | ना | | आ [14] | म |
| म [15] | श | कः | | ह्री [16] | | खुः | | व [17] | रम् |
| हृ [18] | यः | | ठः [19] | | नीः [20] | | गा [21] | लिः | |
| सम् | | नो [22] | | फ [23] | | धीः [24] | | | वै [25] |
| | कि [26] | | फ [27] | ल्गु | दा | | वि [28] | शा | खा |
| वै [29] | त | र | णी | | | को [30] | पि | | न |
| शे [31] | वः | | श्र [32] | स | ना [33] | श | नम् | | सः |
| षि | | ख [34] | रः | | गा | | | घ्रुः [35] | |
| कः | | ज | | कु [36] | श | ल | वौ [37] | | तो [38] |
| | मृ [39] | कः | | ली [40] | नः | | पट् [41] | प | दः |

पादन्ते जगदण्डयष्टिममत त्रैविक्रमे क्रीडिते यः पूर्वं निरणेनिजञ्च पयसा यस्तञ्च मूर्ध्ना दधे।
तौ द्वौ ब्रह्मवृषध्वजौ किमपरं जातौ क्षणादीश्वरौ भूमानन्तव वेत्ति कस्स्तुतिमहं कर्तुं कथं वा क्षमे।।

तिरुक्कोविलूर् शिलालेखः

Registration with Registrar News Paper of India 30478 / 77
SAMSKRITASRI

मैत्रीं भजताऽखिलहृज्जेत्रीम्
आत्मवदेव परानपि पश्यत।
युद्धं त्यजत, स्पर्धां त्यजत
त्यजत परेष्वक्रममाक्रमणम्
जननी पृथिवी कामदुघाऽऽस्ते
जनको देवः सकलदयालुः
दाम्यत दत्त दयध्वं जनताः
श्रेयो भूयात्सकलजनानाम्।।

Printed by: Zigma Graphics, 9/1, Thirtharappan Street, Triplicane - 5
Edited and Published by Sri S. Srinivasa Sarma on behalf of the
Samskrit Education Society (Regd.)
Old 212/13-1, New No. 11, St. Mary's Road, R.A. Puram, Chennai - 600028.